श्रीपरमात्मने नमः

रायचन्द्रजैनशास्त्रमाला ।

४

श्रीमद्विमलदासविरचिता

# सप्तभङ्गीतरङ्गिणी ।

भाषाटीकासमेता



प्रकाशक:—श्रीपरमश्रुतप्रभावकमण्डल ।



श्रीपरमात्मने नमः

श्रीमद्विमलदासविरचिता

# सप्तभङ्गीतरङ्गिणी

आचार्योपाधिधारिपण्डितठाकुरप्रसादशर्म्मप्रणीता

हिन्दीभाषाटीकोपेता ।

विधत्तां केचिदाज्ञाभृतः केचिदाशितवन्तो ऽथवा ।
विध्वान्ताधीश पदपद्म शिक्षाविक्षास्मकं भवतु ॥



सा च

मुम्बापुरीस्थश्रीपरमश्रुतप्रभावकमण्डलस्वत्वाधिकारिभिः
निर्णयसागराख्यमुद्रणालये मुद्रयित्वा
प्राकाश्यं नीता ।

श्रीवीरनिर्वाणसंवत् २४३१

अत्रानेकान्तवादे च सर्वं वस्तुजातमनेकान्तात्मकमस्तीति स्वरूपादिभिर्घटस्यास्तित्वमेव नत्वनित्यत्वादिकमिति वियोधयितुमवधारणार्थकैवकारप्रयोग स्यादस्त्येव घट इत्यादिरूपेणैतत्खण्डनमण्डनप्रकारश्च सुविस्तरमाचार्येण प्रदर्शितम् । निपातानां च द्योतकवाचकत्वंनोभयात्मकता च प्रदर्शिता । यद्वाऽथान्यव्यावृत्तिरेव सर्वशब्दवाच्यमित्यवधारणार्थकैवशब्दाभावेपि परस्पादिना व्यावृत्तिः स्यात एव सिद्धेत्याशङ्कित तत्र विधिमुखेनैव सर्वत्र शाब्दबोधप्रणाल्या अनुभवगोचरत्वेनानवस्थादोषप्रसङ्गात् न तन्मत सङ्गतमिति प्रत्याख्यातम् । तथाविधविचारानेकान्ताद्यनेकार्थसमयेऽपि प्रकृतवस्तुनोऽनेकान्तस्वरूपप्रदर्शनार्थम् स्यादस्त्येव घट इत्यादिभङ्गेषु तिङन्तप्रतिरूपकनिपातात्मकस्याच्छब्दप्रयोग. कृत स च चानेकान्तवादेऽप्रौढविनेयानां सौकर्येण प्रतिपत्त्यर्थं प्रौढविनेयानां तु वस्तुनोऽनेकान्तस्वभावेन स्याच्छब्दप्रयोगमन्तरापि तादृशार्थप्रतीतेस्तदनावश्यकता प्रदर्शितेत्यवमेयम् ।

अनन्तरं च प्रमाणरूपसकलादेशेन कालात्मस्वरूपादिभिर्भेदवृत्त्या अभेदोपचारेण वा नयरूपविकलादेशेन च भेदवृत्त्याभेदोपचारेण घटादिरूपार्थप्रतिपादन कृतम् तत्र च कालादिना सर्वेषामभेद. प्रदर्शितः । यथा यत्कालावच्छेदेन च घटादावस्तित्व वर्तते तत्कालावच्छेदेनान्याशेषधर्मा अपि तत्रैव सन्ति एवंरीत्या कालेनाभेदवृत्तिस्तथैवात्मस्वरूपादिभि प्रतिपादिता । पूर्वोक्तरीत्या पदार्थनिरूपणानन्तरं वाक्यार्थनिरूपणमस्वरूपाद्यवच्छिन्नतास्तित्वाश्रय' परत्वाद्यवच्छिन्ननास्तित्वाश्रयो घट इत्यादिरूपेण प्रतिपादितम् । तत्रस्मात् केच घटस्य स्वरूपादय. केच पटरूपादय इति शङ्कामुपन्यस्य घट इत्याकारकबुद्धौ प्रकारतया भासमानो घटपदशक्यतावच्छेदकीभूतो य. मद्रूपपरिणामलक्षणो घटत्वरूपधर्मः स एव घटस्य स्वरूप तदन्यपटत्वादिक पररूपमिति स्वरूपेण घटस्यास्तित्व पररूपेण च नास्तित्वमिति । यद च पटत्वादिपररूपेणापि घटस्यास्तित्वाङ्गीकारे घटस्य पटात्मकत्वापत्ति स्वरूपेणापि नास्तित्वे खरविषाणवत् शून्यतावाद इत्येवमादिना स्वरूपपररूपस्य बहवो विकल्पा उपन्यस्ता. । घटस्य स्वरूपद्रव्यक्षेत्रकालैरस्तित्व पररूपद्रव्यक्षेत्रकालैश्च नास्तित्व प्रतिपादितम् ।

अग्रेच सकलपदार्थानां स्वकीयपरकीयस्वरूपादिचतुष्टयेन व्यवस्थाया स्वरूपादीनामप्यन्यान्यरूपादिकमपेक्षितमेवैतेषामप्यन्यदित्यनवस्था तया च ययावस्तुप्रतीतिव्यवस्था कार्य्येति किं स्वरूपादिनास्तित्वेन पररूपादिना च नास्तित्वेन किमित्याशङ्क्य वस्तुस्वरूपमेव स्वरूपपररूपाद्यवच्छिन्न सत्तासत्त्वादिक विषयीकरोतीति निर्णेतु ग्रन्थप्रवृत्तेरन्यथा च नाना निरङ्कुशविप्रतिपत्तीर्निवारयितुमशक्तेरिति समाहितम् ।

•अग्रेच केवलान्वयिप्रमेयादिपदार्थेषु स्वपररूपादीनामप्रसिद्धे कथं व्यवस्थेत्याशङ्क्य तत्रापि प्रमेयत्व प्रमेयस्य स्वरूप, घटत्वादिकं च पररूप, यद्यपि घटत्वादीनामपि प्रमेयत्वमक्षत तथापि तत्र प्रमेयत्वरूपेण तद्रूपता नास्तीति विचार्य्य ग्रन्थकारेण तथा लिखितम् । अथवा प्रमेयत्वं प्रमेयस्य स्वरूपम् अप्रमेयत्व च प्रमेयस्य पररूपमिति, यद्यपि प्रमेयत्वाभावरूपा प्रमेयत्वस्याप्रसिद्धिस्तथापि गगनकुसुमशशविषाणादौ चाप्रमेयत्वप्रसिद्धि- स्फुटैव तत्र च प्रमाणजन्यप्रमितिविषयताभावेन प्रमेयत्वाभावादिति प्रतिपादितम् ।

अथाग्रे च महासत्वरूपस्य शुद्धद्रव्यस्य सम्पूर्णद्रव्यक्षेत्रकालभावात्मकतया तद्भिन्नत्वेनान्यद्रव्याभावात् कथ तत्र स्वपररूपादिव्यवस्थेत्याशङ्क्य तत्रापि सकलद्रव्यक्षेत्रकालादीनां स्वरूपत्वं विकलद्रव्यादीनां च पररूपत्वमिति सकलद्रव्यक्षेत्रकालाद्यपेक्षयाऽस्तित्व विकलद्रव्यक्षेत्रकालाद्यपेक्षया च नास्तित्वमिति समाहितम् ।

अग्रेचास्तित्वस्य स्वाश्रयत्वेन वास्तविकवस्तुरूपता, नास्तित्वस्य च पराधीनत्वेन वस्तुरूपतेत्यनेकान्तवादे अस्तित्वमिव नास्तित्वमपि वस्तुरूपमिति डिण्डिमघोषणा कैमर्थिकेत्याशङ्क्य साधर्म्यवैधर्म्ययोरिवास्तित्वनास्तित्वयोरविनाभाव' प्रदर्शित. सूक्ष्मबुद्धीनां च घटादिस्वरूपाऽवबोधेस्तित्वमिवान्यपदार्थाभावस्यापि प्रतीते' अन्यप्रतिषेधाभावे च वस्त्वन्तरभानापत्ते. । यद्यपि शशविषाणादिषु नास्तित्वस्यैवावलोकनात् नास्तित्वमस्तित्वमन्तरापि सम्भवतीति नास्तित्वास्तित्वयोरविनाभावो नास्ति तत्कथ नास्तित्वमपि वस्तुरूपमित्याशङ्क्य तत्रापि गोमहिषादिसमवायित्वेन प्रसिद्धस्य विषाणादे. शशादिसमवायित्वेन च तस्य नास्तित्वमिति निश्चय एवमेव मेषादिषु समवायित्वेन प्रसिद्धरोम्ण कूर्मसमवायित्वेन तस्य निषेध इत्यस्तित्वनास्तित्वयोरविनाभावोक्षत एवेति ध्येयम् ।

एवमेव व्यस्तौ क्रमयोजितौ समस्तौ च सह योजितौ द्रव्यपर्यायौ समाश्रित्य स्यादस्ति नास्ति चावक्तव्य एव घट इति सप्तभङ्गप्रवृत्तिरुपदर्शिता । तत्र पार्थक्येन द्रव्यपर्याययोः क्रमशो योजनया चास्तित्वनास्तित्वाश्रयता घटस्य, समस्तसहार्पितयोजनया चावक्तव्यताश्रयता । लक्षणनिर्वचनलक्षणसमन्वयादिकं च ग्रन्थव्याख्याऽवसरे विस्तरेणोक्तं तत एवावगन्तव्यमिति संक्षेपः शम् ।

सप्तभङ्गान् व्याख्यायैकान्ततो द्रव्यपर्यायावक्तव्यवादिनां साङ्ख्यबौद्धादीनां मतमनुपपन्नम् सर्वथा द्रव्यस्य केवलस्य पर्यायस्यावक्तव्यत्वस्य चाऽप्रतीतेः । एतदग्रे चानेकान्ते सप्तभङ्गीप्रवृत्त्यप्रवृत्तिभ्यां दोषमुपन्यस्तम् । प्रमाणनयार्पणभेदाच्च समाहितम् । एतत्प्रसङ्गत एव सम्यगेकान्तो मिथ्यैकान्तः सम्यगनेकान्तो मिथ्यानेकान्त इति रीत्यैकान्तानेकान्तयोर्द्वैविध्यं प्रतिपादितम् । तत्रापि स्यादेकान्तः स्यादनेकान्तः स्यादुभयः स्यादवक्तव्य इत्यादि रूपेण सप्तभङ्गी योजितेति ध्येयम् । अनयैव दिशा नित्यत्वानित्यत्वैकत्वानेकत्वादिधर्मेषु चैवमेवमियं सप्तभङ्गी योजनीयेत्यभिहितम् ।

अथाग्रे सत्तासामान्यस्यापि निखिलवस्तुव्यापिनोऽनन्ताकारं च सर्वं वस्तु जानन् स्यादेकं स्यादनेकमिति कथनाऽनुपपत्तिः नित्यैकस्थायिरूपेण सत्तासामान्यस्य जैनसिद्धान्तेऽभावादिति शङ्कितम् । तत्तद्व्यक्त्यात्मना सत्त्वस्यानेकत्वेऽपि स्वरूपेण तस्यैकत्वस्वीकरणात्समाहितम् ।

एवमेव अथ स्याज्जीवः स्यादजीवः इति मूलभङ्गद्वयम् । तत्रोपयोगात्मना अयं जीवः प्रमेयत्वाद्यात्मना चायमजीवः इत्यादिरूपा व्यवस्था प्रदर्शिता । अत्र स्वामिभट्टाकलङ्कदेवानां वचनमपि प्रमाणतयोपन्यस्तम् । यथा,—

प्रमेयत्वादिभिर्धर्मैरचिदात्मा चिदात्मकः ।
ज्ञानदर्शनतस्तस्माच्चेतनाऽचेतनात्मकः ॥ १ ॥ इति.

अथाग्रे तदेव नित्यं तदेवानित्यं तदेवैकम् तदेवानेकम् स एव जीवः स एवाजीवः इत्यादि स्वरूपनिरूपणादनेकान्तवादश्छलमात्रमित्याशङ्क्य छलादिलक्षणाभावाद् वस्तुनश्च तादृशस्वभाव इति रीत्या समाहितम् । एवमेव संशयादिलक्षणाभावात्संशयादिजनकमपि नानेकान्तवाद इति समाहितम् ।

अथाग्रे च विरोधवैयधिकरण्यानवस्थासंकरव्यतिकरसंशयाप्रतिपत्त्यभावरूपा अष्टौ दोषा अनेकान्तवादे सन्तीत्याशङ्क्य प्रकृते विरोधादयो न सन्ति विरोधो हि वस्त्वनुपलम्भसाध्यः कथंचित्प्रतीयमाने वस्तुनि स्वरूपाद्यपेक्षया विवक्षितयोः सत्त्वासत्त्वयोर्नास्ति विरोधः इत्यादि युक्त्या वध्यघातकभाव, सहानवस्थितिः, प्रतिबध्यप्रतिबन्धकः भावश्चेति त्रिविधविरोधमध्ये कस्याप्यत्रानेकान्तवादेऽस्तित्वाभाव इति रीत्या च समाहितम् । अनयैव रीत्या सत्त्वासत्त्वयोः प्रधानगुणभावेन सर्वत्र प्रतीतेर्वैयधिकरण्यादिदोषा अपि निरस्ताः ।

अग्रे चानेकान्तवादे साङ्ख्यादिवादिनामानुकूल्यं प्रदर्शितम् । साङ्ख्यास्तावत्सत्त्वरजस्तमसां साम्यावस्था प्रधानमिति वदन्तोऽन्योन्यविरोधिधर्माणामेकत्र सम्मेलनेनानेकान्तवादं स्वीचक्रुः । नैयायिका अपि द्रव्यत्वादिकं सामान्यविशेषरूपमङ्गीकुर्वन्तोऽनेकान्तवादे सम्मतिमददन् । सौगता अपि मेचक (मणिविशेष) ज्ञानमेकमनेकाकारं कथयन्तोऽनेकान्तवादं स्वीचक्रुरित्यादि रीत्या चार्वाकमीमांसकादीनामपि स्वमतानुकूल्यं प्रदर्शितम् ।

अस्य च ग्रन्थस्यार्य्यभाषाऽनुवादकरणे जैनवंशाऽवतंसश्रीश्रेष्ठिवर्य्यरेवाशंकरजगजीवनमहाशयसम्बन्धिश्रीरायचन्द्रजैनशास्त्रमालाप्रबन्धकर्त्ता श्रीमन्मनसुखलालरविजीभाईमहाशयेनाज्ञप्तोऽहम् । विशिष्टविदुषा मद्विधेनैव सुस्पष्टं विज्ञप्तिर्यत्स्वति प्रमादे क्षन्तव्या सा भवद्भिरिति शम् ।

**विदुषां चरणसरोरुहसेवी,—**

प्रयागमण्डलान्तर्गतहरिपुरग्रामनिवासी मुरादाबादस्थगवर्णमेण्टनार्मलपाठशालाध्यापकः
महामहोपाध्याय श्री ६ दामोदरशास्त्रिणामन्तेवासी
आचार्य्योपाधिधारिठाकुरप्रसादशर्म्मा द्विवेदी ।

---

और स्याद्वादमें जो कुशल हैं उनको आवश्यकता नहीं है। ऐसे ही अनेकान्तस्वरूप अर्थके बोधनार्थ स्यात् इस निपातका भी भङ्गोंमें प्रयोग किया है। और स्याद्वाद न्यायमें कुशल विद्वानोंके अर्थ तो 'अस्तिघटः' इतना ही प्रयोग पर्याप्त है, क्योंकि उनको तो शब्दकी शक्ति तथा प्रमाणादिद्वारा अनेकान्तरूप अर्थका बोध हो ही जावेगा, इस प्रकार सिद्धान्त किया है, और इसी प्रसङ्गमें निपातोंका वाचकत्व और द्योतकत्व दोनों पक्ष शास्त्रसम्मत हैं यह भी दर्शाया है। तथा जो बौद्धमतावलम्बी अनेकान्त पक्षको छोड़के अन्य व्यावृत्ति ही शब्द-शक्ति मानते हैं, उनका खंडन भी किया है। अर्थात् अन्यके निषेधसे अतिरिक्त सर्वत्र शब्दजन्य ज्ञान घटादि पदसे विधिमुखसे होता है, न कि व्यावृत्ति रूपसे इस हेतुसे तथा प्रकारान्तरसे भी बौद्धमतकी असंगति दर्शाई है। इसी प्रकार सप्तभङ्गोंके अर्थ अनेक तर्क वितर्कोंसे वर्णन किया है; जिसको हमने संस्कृत भूमि-कामें स्पष्ट किया है, यहां पुनः लिखनेकी आवश्यकता नहीं है। इस ग्रन्थको जो आरंभसे अन्ततक मनोयोगसे पढ़ेंगे, उनको पूर्ण रीतिसे विदित होगा, क्योंकि सब विषय शृङ्खलाबद्ध है।

मुझे इस ग्रन्थका भाषानुवाद करनेकी आज्ञा रायचन्द्रशास्त्रमाला के प्रबन्धकर्ताद्वारा प्राप्त हुई।

सर्वशुभचिन्तकः—

आचार्य्यठाकुरप्रसादः।



# रायचन्द्रजैनशास्त्रमाला.

## सप्तभङ्गीतरङ्गिणी ।

वन्दित्वा सुरसन्दोहवन्दिताङ्घ्रिसरोरुहम् ।
श्रीवीरं कुतुकात्कुर्वे सप्तभङ्गीतरङ्गिणीम् ॥ १ ॥

इह खलु तत्त्वार्थाधिगमोपायं प्रतिपादयितुकामः सूत्रकारः "प्रमाणनयैरधिगमः" इत्याह । तत्राधिगमो द्विविधः स्वार्थः, परार्थश्चेति । स्वार्थाधिगमो ज्ञानात्मको मतिश्रुतादिरूपः । परार्थाधिगमः शब्दरूपः । स च द्विविधः—प्रमाणात्मको नयात्मकश्चेति । कार्त्स्न्येन तत्त्वार्थाधिगमः प्रमाणात्मकः । देशतस्तत्त्वार्थाधिगमो नयात्मकः । अयं द्विविधोऽपि भेदः सप्तधा प्रवर्तते, विधिप्रतिषेधप्राधान्यात् । इयमेव प्रमाणसप्तभङ्गी नयसप्तभङ्गीति च कथ्यते । सप्तानां भङ्गानां—वाक्यानां, समाहारः समूहः, सप्तभङ्गीति तदर्थः । तानि च वाक्यानि—

भाषाकारका मङ्गलाचरण.

ध्येयं चिद्रूपं वीतरागमकल्मषम् ।
प्रणम्य परया भक्त्या स्वकार्यं समारभे ॥ १ ॥
श्रीगुरोश्चरणद्वन्द्वं स्मृत्वा वारमहर्निशं ।
सप्तभङ्गितरङ्गिण्या भाषार्थं करोम्यहम् ॥ २ ॥

शिष्टाचारप्राप्त विघ्नविनाशार्थ तथा ग्रन्थकी परिसमाप्तिकी कामनासे यह ग्रन्थकार श्रीविमलदासजी स्वामीजी श्रीअर्हन् भगवान् महावीर स्वामीको वन्दना 'वन्दित्वा' इत्यादि श्लोकसे करते हैं ।

श्लोकान्वय—अहं विमलदासः यह अध्याहृत पद है. सुरसन्दोहवन्दिताङ्घ्रिसरोरुहं श्रीवीरं—श्रिया अष्टप्रातिहार्यादिलक्ष्म्या पञ्चकल्याणसमये इन्द्रासनकम्पनादिलक्ष्म्या च युक्तो वीरः श्रीवीरस्तं वन्दित्वा कुतुकात् सप्तभङ्गीतरङ्गिणीम् कुर्वे ॥ भावार्थ—मैं विमलदास सम्पूर्ण देवसमूहोंसे जिसका चरणकमल नम्रभूत है ऐसे अथवा सर्व देवसमूह नमस्कृत चरणारविन्दयुक्त तथा अष्ट महा

१ समवसरणस्थ अष्टप्रातिहार्य. २ [illegible]. ३ समस्तक. ४ कुतूहलपरतया भैसिंह मतः. ५ सप्तानां स्यादस्ति नास्तीत्यादि भङ्गानां समाहारः सप्तभङ्गी तस्याः तरङ्गिणीम्. ६ एकवचनमिति भावः.

प्रातिहार्य्यादि लक्ष्मी और गर्भ निवासादि पञ्च मंगल समयमें इन्द्रोंके आसनोंकी कम्पन आदि श्रीयुक्त महावीरस्वामीको नमस्कार करके कुतूहल अर्थात् अनायाससे (विनापरिश्रमके) इस सप्तभङ्गितरङ्गिणी नाम ग्रन्थको अर्थात् स्यादस्ति स्यान्नास्ति इत्यादि सप्त भेद प्रतिपादक तर्कशास्त्रको रचता हूं ॥

जबतक सम्यग्दर्शन सम्यग्ज्ञान तथा सम्यक्चारित्रकी प्राप्ति नहीं होती तबतक प्राणी अनादिकालसे प्रवृत्त इस संसारमें कर्मोंके बन्धनसे मुक्त होकर मुक्तिरूप सुखको कदापि नहीं प्राप्त होता और इनकी प्राप्ति जीव आदि तत्त्वोंके पूर्ण ज्ञानसे होती है. इसी हेतुसे भगवान् सूत्रकारने तत्त्वार्थज्ञानके उपायके प्रतिपादनकी इच्छासे "प्रमाणनयैरधिगमः" यह सूत्र कहा है. अर्थात् सम्यग्दर्शनादिक तथा नाम स्थापना द्रव्य आदि विधिसे निक्षिप्त जीव, अजीव, आस्रव, बन्ध, संवर, निर्जरा, तथा मोक्षरूप तत्त्वार्थोंका अधिगम, प्रमाण तथा नयसेही होता है. इस सूत्रमें जो अधिगम कहा है वह दो प्रकारका है। एक स्वार्थ अधिगम दूसरा परार्थ अधिगम. इनमें मतिश्रुत आदिरूप ज्ञानात्मक अधिगमको स्वार्थाधिगम कहते हैं और शब्दात्मक अर्थात् वचनरूप अधिगमको परार्थाधिगम कहते हैं। और पुन. वह अधिगम प्रमाणरूप तथा नयरूप इन दो मार्गोंमें विभक्त है। इनमेंसे सम्पूर्ण रूपसे तत्त्वार्थाधिगम जिसकेद्वारा होता है उसको प्रमाणात्मक कहते हैं। और एक देशसे जिसकेद्वारा तत्त्वार्थाधिगम होता है उसको नयात्मक कहते हैं। पुनः विधि तथा निषेधकी प्रधानतासे ये दोनो भेद सप्तभङ्गमें विभक्त हैं। इसी सप्त विभाग समूहको प्रमाणसप्तभङ्गी और नयसप्तभङ्गी भी कहते हैं. क्योंकि 'सप्तानां भङ्गानां वाक्यानां समाहारः समूहः सप्तभङ्गी' अर्थात् सप्त भङ्गोंका जो समूह है उसका नाम सप्तभङ्गी है. इस प्रकार सप्तभङ्गी शब्दका व्याकरणकी रीतिसे अर्थ होता है. जैसे 'त्रयाणां लोकानां समाहारः त्रिलोकी' अष्टानां सहस्राणां समाहारः अष्टसहस्री। अर्थात् तीन लोकोंका जो समूह उसको त्रिलोकी, और अष्ट सहस्रोंका जो समूह है उसको अष्टसहस्री कहते है। ऐसे ही सप्तभङ्गोंके समूहको सप्तभङ्गी कहते हैं। इन सप्तभङ्गोंका विभाग इस प्रकार है।

**"स्यादस्त्येव घटः ॥ १ ॥ स्यान्नास्त्येव घटः ॥ २ ॥ स्यादस्ति नास्ति च घटः ॥ ३ ॥ स्यादवक्तव्य एव ॥ ४ ॥ स्यादस्ति चावक्तव्यश्च ॥ ५ ॥ स्यान्नास्ति चावक्तव्यश्च ॥ ६ ॥ स्यादस्ति नास्ति चावक्तव्यश्च ॥ ७ ॥" इति** एतत्सप्तवाक्यसमुदाय. सप्तभङ्गीति कथ्यते।

| | |
|---|---|
| स्यादस्ति घट. | कथंचित् घट है ॥ १ ॥ |
| स्यान्नास्ति घट. | कथंचित् घट नहीं है ॥ २ ॥ |

---

१ लक्ष्मी वा ऐश्वर्य्यसहित अन्तिमतीर्थंकरको. २ महातत्त्वार्थ सूत्र अध्याय १ सूत्र ६ ३ ज्ञान. ४ प्रमाण तथा नयरूप ५ सात ६ वाक्योंका. ७ आठ.

स्यादस्ति नास्ति च घटः कथंचित् घट है और कथंचित् नहीं है ॥ ३ ॥
स्यादवक्तव्यो घटः कथंचित् घट अवक्तव्य है ॥ ४ ॥
स्यादस्ति चावक्तव्यश्च घटः कथंचित् घट है और अवक्तव्य है ॥ ५ ॥
स्यान्नास्ति चावक्तव्यश्च घटः कथंचित् नहीं है तथा अवक्तव्य घट है ॥ ६ ॥
स्यादस्ति नास्ति चावक्तव्यश्च घटः कथंचित् है नहीं है इस रूपसे अवक्तव्य घट है ॥७॥

इनही सप्तवाक्योंके समुदायका नाम सप्तभंगी है ।

तल्लक्षणन्तु प्राश्निकप्रश्नज्ञानप्रयोज्यत्वे सति, एकवस्तुविशेष्यकाविरुद्धविधिप्रतिषेधात्मकधर्मप्रकारकबोधजनकसप्तवाक्यपर्याप्तसमुदायत्वम् । अस्ति चेदं लक्षणं दर्शितवाक्यसप्तके । तथाहि प्राश्निकप्रश्नज्ञानप्रयोज्यत्वं हि परम्परया प्राश्निकप्रश्नज्ञानजन्यत्वम् । तथा च प्राश्निकप्रश्नज्ञानेन प्रतिपादकस्य विवक्षा जायते, विवक्षया च वाक्यप्रयोग, इति प्राश्निकप्रश्नज्ञानप्रयोज्यत्वमुक्तसप्तवाक्यसमुदायस्याक्षतम् । एवं घटादिरूपैकवस्तुविशेष्यकाविरुद्धविध्यादिप्रकारको यो बोधः घटोऽस्तीत्यादिरूपो बोधः, तज्जनकत्वं च सत्त्व इति ।

इस सप्तभंगीका लक्षण यह है कि—प्रश्नकर्ताके प्रश्नज्ञानका प्रयोज्य रहते, एक पदार्थ विशेष्यक अविरुद्ध विधिप्रतिषेधरूप नानाधर्मप्रकारक बोधजनक सप्तवाक्यपर्याप्तसमुदायता । अर्थात् प्रश्नकर्ताके प्रश्नज्ञानका जो प्रयोज्य रहते एक किसी पदार्थको विशेष्य करके अर्थात् एक वस्तुमें परस्पर अविरुद्ध नाना धर्मोंका निश्चायक ज्ञानजनक सप्तवाक्योंमें रहनेवाला सप्तभंगी नय है । यह लक्षण पूर्वोक्त सप्तवाक्य समुदायमें है । इसका समन्वय इस प्रकार है । प्रश्नकर्ताके प्रश्नज्ञानकी प्रयोज्यता परंपरासे प्रश्नकर्ताके प्रश्नज्ञानकी जन्यतारूप होगी । अर्थात् प्रश्नकर्ताका प्रश्न तो जनक और प्रश्नज्ञान उसका जन्य होगा । क्योंकि प्रश्नकर्ताके प्रश्नज्ञानसे ही प्रतिपादन करनेवालेकी विवक्षा होती है और विवक्षासे वाक्य प्रयोग होता है । इस रीतिसे प्राश्निक प्रश्नज्ञान प्रयोज्यता पूर्वोक्त इस वाक्यसमुदायमें पूर्णरूपसे है और इसीप्रकार घट आदि एक पदार्थ विशेष्यक परस्पराविरुद्ध विधि-निषेधरूप नानाधर्म प्रकारक 'स्यादस्ति घटः स्यान्नास्ति घटः' किसी विवक्षासे घट है किसी विवक्षासे नहीं है ऐसा जो ज्ञान है उसका जनक पूर्वोक्त सप्तभंगी नय है ॥

तदिदमाहुरभियुक्ताः—"प्रश्नवशादेकत्र वस्तुन्यविरोधेन विधिप्रतिषेधकल्पना सप्तभङ्गी" इति।

इस विषयमें आचार्योंने ऐसा कहा है । प्रश्नके वशसे एक किसी घटादि वस्तुमें अविरोधरूपसे विधि तथा प्रतिषेधकी जो कल्पना है उसको सप्तभंगी नय कहते हैं ।

अस्यायमर्थः—'प्रश्नवशात्' इत्यत्र पञ्चम्याः प्रयोज्यत्वमर्थः । विधिप्रतिषेधकल्पनेत्यस्य विधिप्रतिषेधप्रकारकबोधजनिकेत्यर्थः । अविरोधेनेति तृतीयार्थो वैशिष्ट्यं विधिप्रतिषेधयोरन्वेति

१ [illegible]. २ [illegible]
६ किसी विवक्षासे घट है किसी
३ परम्परया. ४ घटोऽस्ति इत्यादि. ५ [illegible]
[illegible]

एकत्र वस्तुनीत्यत्र सप्तम्यर्थो विशेष्यत्वम् । तस्य कल्पनापदार्थबोधजनकत्वैकदेशे बोधेऽन्वयः सप्तभङ्गीत्यस्य सप्तवाक्यपर्याप्तसमुदायत्वाश्रयोऽर्थः । तथाचास्मदुक्तलक्षणमेव पर्यवसन्नम् ।

इस वाक्यमें 'प्रश्नवशात्' यह जो पञ्चम्यन्त पद है इस पदमें पञ्चमी विभक्तिका प्रयोज्यता अर्थ है 'विधि प्रतिषेध कल्पना' इस पदका विधिप्रतिषेध प्रकारक बोधजनिका अर्थ है 'अविरोधेन' यहां तृतीया विभक्तिका वैशिष्ट्य अर्थ है और उसका अन्वय विधिप्रतिषेधके साथ होता है । 'एकत्र वस्तुनि' इन पदमें सप्तमीका अर्थ विशेषता है और उसका अन्वय बोधजनकतारूप जो कल्पना पदार्थ उसके एक देशभूत बोधके साथ होता है । और सप्तभङ्गी इस पदका अर्थ सप्तवाक्यपर्याप्तसमुदायताश्रय है । इस रीतिसे हमने प्रथम जो सप्तभङ्गी लक्षण कहा है वही सिद्ध हुआ अर्थात् प्राश्निक प्रश्नज्ञानका प्रयोज्य होकर एक वस्तु विशेष्यक अविरुद्ध विधिप्रतिषेधरूप नानाधर्मप्रकारक बोधजनक सप्तवाक्यपर्याप्तसमुदायतारूप जो है वही सप्तभङ्गी नय है ॥

अत्र च प्रत्यक्षादिविरुद्धविधिप्रतिषेधवाक्येष्वतिव्याप्तिवारणायाविरुद्धेति । घटोऽस्ति पटो नास्तीत्यादिसमुदायवारणाय एकवस्तुविशेष्यकेति । स्यादस्ति घटः, स्यान्नास्ति घटः, इति वाक्यद्वयमात्रेऽतिव्याप्तिवारणाय सप्तेति घटमानयेत्युदासीनवाक्यघटितनिरुक्तवाक्यसप्तकेऽति अव्याप्तिवारणाय सप्तवाक्यपर्याप्तेति ।

इस लक्षणके जो विशेष्य दलमें अविरुद्ध विधिप्रतिषेधात्मक धर्मप्रकारक इस पदमें अविरुद्ध पद है वह प्रत्यक्षादि प्रमाणमें विरुद्ध जो विधिप्रतिषेधरूप वाक्य है उनमें अतिव्याप्ति दोष वारणकेलिये है । क्योंकि लक्षण ऐसा होना चाहिये जिसमें अतिव्याप्ति अव्याप्ति तथा असंभव दोष न हो । और 'घटोऽस्ति पटो नास्ति'[1] इत्यादि समुदायमें लक्षण न जाय इसलिये 'एकवस्तुविशेष्यक'[2] यह पद दिया है । 'स्यादस्ति घटः स्यान्नास्ति घटः'[3] इन दो वाक्योंमें अतिव्याप्ति वारण करनेके अर्थ सप्त यह पद दिया है ॥ तथा 'घटमानय'[4] इस उदासीन वाक्यघटित घटको लेकर पूर्वोक्त वाक्य सप्तकमें अव्याप्ति दोष निराकरण करनेके अर्थ 'सप्तवाक्य पर्याप्त समुदायता' यह विशेषण दिया है अर्थात् इन सप्त पूर्वोक्त वाक्योंमें ही यह लक्षण घटित होता है अन्यत्र नहीं ॥

यद्यपि सत्यन्तनिवेशस्यातिव्याप्त्यव्याप्त्यादि दोषवारकत्वं न सम्भवति, तथापि प्रतिपाद्यप्रश्नानां सप्तविधानामेव सद्भावात्सप्तैव भङ्गा इति नियमसूचनाय तन्निवेशनम् । ननु-प्रश्नानां सप्तविधत्वं कथमितिचेत्; जिज्ञासानां सप्तविधत्वात् । प्राश्निकनिष्टजिज्ञासाप्रतिपादकवाक्यं हि प्रश्न इत्युच्यते ।

यद्यपि लक्षणमें जो सत्यन्त विशेषण दल है अर्थात् 'प्राश्निक प्रश्नज्ञान प्रयोज्यत्वे सति'[5] इतना अंश अतिव्याप्ति तथा अव्याप्ति दोषोंके निवारण करनेमें सम्भव

१ घट है पट नहीं है. २ एकवस्तु विशेष्य करके. ३ कथंचित् घट है कथंचित् नहीं है ४ घट लाओ ५ प्रश्नकर्त्ताके प्रश्न ज्ञानका प्रयोज्य रहते.

नहीं हो सकता तथापि प्रश्नकर्त्ताके प्रश्नोंके सात ही भेद हो सकते हैं इसी हेतु भङ्ग अर्थात् वाक्य भी सात ही हो सकते हैं. इस नियमके सूचनार्थ सप्तन्तरस सप्तभङ्गमें नियत किया है क्योंकि उत्तरदाता प्रश्नकर्त्ताके प्रश्नोंको जानकर उसके बोधार्थ वाक्यप्रयोग करता है अतएव सप्तभङ्ग प्रश्नकर्त्ताके प्रश्न ज्ञानके प्रयोज्य अवश्य हुये। शङ्का—प्रश्नोंके सात भेद क्योंकर हो सकते हैं? यदि ऐसी शङ्का करो तो उत्तर यह है कि—प्रश्नकर्त्ताके जाननेकी इच्छाओंके सात ही भेद हो सकते हैं क्योंकि प्रश्न कर्त्तामें जो किसी पदार्थकी जाननेकी इच्छा है उस इच्छाके प्रतिपादक जो वाक्य हैं उनको ही प्रश्न कहते हैं क्योंकि गो पदार्थको न जाननेवाला पुरुष गौके जाननेकी इच्छासे किसी पुरुषसे प्रश्न करता है कि 'गोपदवाच्यं किम्' तब वह उत्तर देता है कि "सास्नालाङ्गूलककुत्खुरविषाणाद्यर्थविशिष्टो गौः" सास्ना अर्थात् जो गलेमें स्थित रोम मांस समूहरूप कम्बल ककुद्, खुर तथा विषाण इत्यादि पदार्थ विशिष्ट गौ होता है. 'कः गौः' इस प्रश्नमें गौको न जाननेवाले पुरुषकी उस पदार्थके जाननेकी इच्छाहीसे वक्ता उत्तर देता है क्योंकि जिस पदार्थके जाननेकी इच्छा नहीं है उसको बोधन कराना अयोग्य है उस पुरुषके जाननेकी इच्छा वक्ताको अर्थात् उत्तरदाताको उसके प्रश्नसे ज्ञात होती है इसी कारणसे प्रश्नकर्त्ताका प्रश्न ही जिज्ञासाका प्रतिपादक वाक्य है और वह उत्तरदाताके ज्ञानका जनक है कि अमुक प्रश्नकर्त्ता अमुक पदार्थ जानना चाहता है, उसीके अनुसार वह उत्तर दानमें प्रवृत्त होता है॥

ननु सप्तधैव जिज्ञासा कुतः इति चेन्, सप्तधा संशयानामुत्पत्तेः। संशयानां सप्तविधत्वन्तु तद्विषयीभूतधर्माणां सप्तविधत्वात्। तादृशधर्माश्च कथञ्चित्सत्त्वं, कथञ्चिदसत्त्वं, क्रमार्पितोभयं, अवक्तव्यत्वं, कथञ्चित्सत्त्वविशिष्टावक्तव्यत्वं, कथञ्चिदसत्त्वविशिष्टावक्तव्यत्वम्, क्रमार्पितोभयविशिष्टावक्तव्यत्वम् चेति सप्तैव। एवं च दर्शितधर्मविषयकाः सप्तैव संशयाः। तत्र घटः स्यादस्त्येव वा नवेति कथञ्चित्सत्त्वधर्मावगाहिकः प्रथमसंशयः।

अब कदाचित् यह कहो कि सात ही प्रकारकी जाननेकी इच्छा क्यों होती है? तो इसका उत्तर यह है कि,—संशयोंके भेद भी सात ही प्रकारके होते हैं और संशयोंके सात प्रकारके होनेका कारण यह है कि संशयोंके विषयीभूत धर्मोंके भेद सात ही प्रकारके हैं। उन प्रकारके धर्म कथंचित् सत्त्व १ कथंचित् असत्त्व २ कथंचित् क्रमसे समर्पित सत्त्व असत्त्व उभयरूप ३ कथंचित् अवक्तव्य ४ कथंचित् सत्त्वविशिष्ट अवक्तव्य ५ कथंचित् असत्त्व विशिष्ट अवक्तव्यत्व ६ कथंचित् क्रमसे समर्पित सत्त्व और असत्त्व एतदुभय विशिष्ट अवक्तव्यत्व ७ ये सात हैं इस प्रकार पूर्वप्रदर्शित सत्त्व आदि विषयक सात ही संशय हो सकते हैं।

---

१ सात. २ प्रयोजके. ३ गौ किसको कहते हैं. ४ गलकम्बल ककुत् पीठपर उच्च शरीरका अवयव. ५ घट. ६ प्रश्न ७ ये सात ८ जाननेकी इच्छाएं. ९ सात. १० किसी विषयका दो कोटियोंसे ११ पहिले दर्शाये हुये

यहांपर 'घटः स्यादस्त्येव वा नवा' यह घट विषयक सत्त्व तथा उसके अभावविषयक प्रथम संशय है ॥

ननु च–कथञ्चित्सत्त्वस्याभावः कथञ्चिदसत्त्वम्, तस्य न संशयविषयत्वसम्भवः, कथञ्चित्सत्त्वेन साकं विरोधाभावात् । एक धर्मिकविरुद्धनानाधर्मप्रकारकज्ञानं हि संशयः नत्वेकधर्मिकनानाधर्मप्रकारकज्ञानमात्रं, तथा सति अयं घटोद्रव्यमित्यादीदन्त्यावच्छिन्नविशेष्यकघटत्वद्रव्यत्वरूपनानाधर्मप्रकारकज्ञानस्यापि संशयत्वापत्तेः । तथा च कथं घटस्यादस्त्येव न वेति संशयः इति चेत् ? उच्यते;–दर्शितसंशये कथञ्चिदस्तित्वसर्वथास्तित्वयोरेवकोटिता; तथा च नोक्तानुपपत्तिः, तयोश्च परस्परम् विरुद्धत्वात् ।

शङ्का–कथंचित् सत्त्वका अभाव कथंचित् असत्त्वरूप ही है वह संशयका विषय नहीं हो सकता क्योंकि कथंचित् सत्त्वके साथ उसका विरोध नहीं है कथंचित् सत्त्व और कथंचित् असत्त्व इनका विरोध नहीं है किसी विवक्षासे सत्ता और किसी विवक्षासे असत्ता भी रह सकती है । क्योंकि एक धर्मिक एक पदार्थविषयक परस्पर विरुद्ध नानाधर्म प्रकारक ज्ञानको संशय कहते हैं । जैसे एक वृक्षके ठूंठको देखकर 'स्थाणुर्वा पुरुषो वा' ऐसे विरुद्ध नाना ज्ञानको संशय कहते हैं । स्थाणुत्व और पुरुषत्व ये दोनों विरुद्ध धर्म एक विषयमें हुये इस हेतुसे यह संशय ज्ञान है । न कि एक पदार्थविषयक नानाधर्म प्रकारक ज्ञानमात्रको संशय कहते हैं । क्योंकि परस्पर नानाधर्मोंके विरोधके अभावमें एक पदार्थमें नानाधर्ममात्रको यदि संशय ज्ञान मानोगे तो 'अयं घटो द्रव्यम्' इत्यादि वाक्यमें इदन्तावच्छिन्न विशेष्यक घटत्व तथा द्रव्यत्वरूप नानाधर्म प्रकारक ज्ञान भी संशयरूप ज्ञान हो जायगा. क्योंकि इसमें घटत्व और द्रव्यत्व ये नानाधर्म हैं. परन्तु घटत्व और द्रव्यत्व इन दोनों धर्मोंका विरोध नहीं. ऐसे ही कथंचित् सत्त्व असत्त्वका विरोध नहीं हैं तो इस रीतिसे 'घटः स्यादस्त्येव न वा' इस ज्ञानको संशयरूपता कैसे होगी? यदि ऐसा कहो तो इसका उत्तर कहते हैं–पूर्वदर्शित विषयमें कथंचित् अस्तिता और सर्वथा अस्तित्व ये दो कोटि हैं । इस कारणसे पूर्वोक्त शङ्का युक्त नहीं है । क्योंकि घट विषयक कथञ्चित् अस्तिता और सर्व प्रकारावच्छिन्न अर्थात् सर्व प्रकारसे अस्तिता इन दोनों धर्मोंका परस्पर विरोध प्रसिद्ध ही है एक कोटिमें कथंचित् अस्तिता है और दूसरी कोटिमें सर्वथा अस्तिता है. जैसे जीव विषयमें दो कोटि हो सकती हैं. कथञ्चित् साकारता और सर्वथा साकारता । यह संशय दो भावकोटिको लेकर प्रवृत्त है इसीसे 'अयं स्थाणुर्वा पुरुषो वा' यह स्थाणु है वा पुरुष है यहां दोनोंमें स्थाणु तथा पुरुषमें दीर्घादि गुण समान ज्ञात होनेसे तथा पुरुषके हस्त पाद अवयव और स्थाणुके कोटरें आदि आकार ज्ञात न होनेसे संशय

---

१ घट है या नहीं. २ सत्ता ३ असत्ता. ४ यह स्थाणु (ठूंठ) है वा पुरुष है. ५ सन्देहात्मक. ६ अविरुद्ध धर्म. ७ यह घट द्रव्य है. ८ घट कथंचित् हैं या नहीं. ९ घटः स्यादस्त्येवनवा. १० किसी अपेक्षासे सत्ता. ११ सर्व प्रकारकसे सत्ता १२ वृक्षका ठूंठ. १३ खोखल.

होता है। ऐसे ही एक पदार्थकी सर्वथा नास्तिता है या कथंचित् नास्तिता है इन दोनों भाव कोटिको लेकर संशय हो सकता है॥

ननु—क्वचित्प्रसिद्धयोरेव संशयकोटिता, यथा—स्थाणुत्वपुरुषत्वयोः, इह च कथंचित्सत्त्वस्य प्रसिद्धत्वेऽपि सर्वथाऽसत्त्वस्य क्वाप्यप्रसिद्धतया कथं संशयकोटित्वम्? इति चेन्न। वस्तुनोऽप्रसिद्धस्यापि प्रसिद्धत्वेन ज्ञातस्य संशयविषयत्वसम्भवात्। घटत्वावच्छिन्नसत्त्वस्यैव कोटित्वं सर्वप्रकारावच्छिन्नसत्त्वप्रकारेण सत्त्वस्य चापरं कोटित्वमिति वस्तुनः सत्त्वे सर्वप्रकारावच्छिन्नत्वस्याभावेऽपि न क्षतिः। एवं द्वितीयादिसंशयप्रकारा अप्यूह्याः। निरुक्तसंशयेन च घटे वास्तवधर्मनिर्णयस्सम्पादनीय इति जिज्ञासोत्पद्यते, जिज्ञासां प्रति संशयस्य कारणत्वात्, तादृशजिज्ञासया घटः किं स्यादस्त्येवेति प्रश्नः, प्रश्नं च जिज्ञासाया हेतुत्वात्। तादृशप्रश्नज्ञानात् प्रतिपाद्यस्य प्रतिपिपादयिषा जायते। प्रतिपिपादयिषया चोत्तरम्। इत्युक्तरीत्या धर्मसप्तविधत्वाधीनं भङ्गानां सप्तविधत्वमिति बोधयितुं सप्तभङ्गीनिर्देश इति ध्येयम्। तदुक्तम्:—

शङ्का,—जब दो धर्म कहीं प्रसिद्ध हों तब ही उनका संशयकोटिमें प्रवेश होता है जैसे स्थाणुत्व स्थाणुमें और पुरुषत्व पुरुषमें पृथक् पृथक् प्रसिद्ध हैं इस हेतुसे उनमें संशय कोटिता है। और 'घट स्यादस्त्येव न वा' इसमें कथंचित् सत्त्वके प्रसिद्ध होनेपर भी सर्वथा असत्त्वके अप्रसिद्ध होनेसे संशय कोटिता कैसे हो सकती है? । ऐसी शङ्का न करो क्योंकि वस्तुधर्मके अप्रसिद्धकी भी प्रसिद्धता ज्ञात होनेसे संशय विषयताका संभव है। यहां प्रकृत विषयमें घटत्वावच्छिन्न कथंचित् सत्त्वकी एक कोटि है और सर्व प्रकारावच्छिन्न सत्त्वकी दूसरी कोटि है। इस रीतिसे वस्तुके सत्त्वमें सर्व प्रकारावच्छिन्न असत्त्व होनेमें भी कोई क्षति नहीं है। इसी पूर्व कथित प्रकारसे द्वितीय तृतीय संशयके प्रकारकी स्वयं कल्पना कर लेनी चाहिये। अर्थात् जैसे कथंचित् घटकी सत्ता तथा सर्वथा घटकी सत्ता इन दोनों कोटिमें संशयकी संभावना है। ऐसे ही कथंचित् घटकी नास्तिता तथा सर्वथा घटकी नास्तिता इत्यादि द्वितीय तथा तृतीय संशयको भी स्वयं समझ लेना चाहिये॥ पूर्वोक्त संशयके दर्शनेसे यथार्थ घटका स्वरूप क्या है यह निर्णय अवश्य करना चाहिये, ऐसी जिज्ञासा विवेकी पुरुषको होती है, क्योंकि जिज्ञासाके प्रति संशयको कारणता है, इस कारण जिज्ञासासे घट कथंचित् है या सर्वथा है ऐसा प्रश्न होता है, क्योंकि प्रश्नमें जिज्ञासा ही कारण है। इस प्रकारके प्रश्नसे उत्तरदाताको उत्तर देनेकी अभिलाषा उत्पन्न होती है और उसी उत्तर देनेकी अभिलाषासे वह उत्तर देता है॥ इस प्रकार पूर्व कथित रीतिसे धर्मोंके सप्तभेदके आधीन भंगोंके 'स्यादस्ति' इत्यादि सप्तभेद ज्ञापनके लिये ग्रन्थमें उत्पन्न भ्रम अर्थात् 'प्राश्निक प्रश्नज्ञान प्रयोज्यत्वे सति' का निवेश किया है ऐसा मानना चाहिये। ऐसा अन्य आचार्यने भी कहा है।

१ स्थाणुत्व. २ पुरुषत्व. ३ घटका धर्मसहित. ४ सर्व प्रकारसहित. ५ सत्ता या होना. ६ हानि. ७ जाननेकी इच्छा.

"भङ्गास्सत्त्वादयस्सप्त संशयास्सप्त तद्गताः ।
जिज्ञासास्सप्त सप्त स्युः प्रश्नास्सप्तोत्तराण्यपि ॥"

'स्यादस्ति घटः' कथंचित् घट है इत्यादि वाक्यमें सत्त्व आदि सप्तभंग इस हेतुसे हैं कि, उनमें स्थित संशय भी सप्त हैं और सप्त संशय इसलिये हैं कि, जिज्ञासाओंके भेद भी सप्त ही हैं और सप्त जिज्ञासाओंके भेदसे ही सप्त प्रकारके उत्तर भी होते हैं.

नन्विदं सर्वं तदोपपद्यते, यदि धर्माणां सप्तविधत्वमेवेति सिद्धं स्यात्; तदेव न सम्भवति । प्रथम द्वितीयधर्मवत्प्रथमतृतीयादि धर्माणां क्रमाक्रमार्पितानां धर्मान्तरत्वसिद्धेस्सप्तविधधर्मनियमाभावात्; इतिचेन्न ।

शङ्का—यह सब तब ही युक्त हो सक्ता है कि जब, धर्मोंके सात ही भेद सिद्ध हों परन्तु येंही संभव नहीं है. क्योंकि प्रथम द्वितीय धर्मके सदृश क्रम तथा अक्रमसे अर्पित प्रथम तृतीय आदि धर्मोंसे सप्त धर्मसे भिन्न अन्य धर्मोंकी सिद्धि होनेसे सात ही प्रकारके धर्म हैं यह नियम नहीं हो सक्ता, तात्पर्य यह है कि जैसे, 'स्यादस्ति' यहां प्रथम धर्म सत्त्व और 'स्यान्नास्ति' यहां द्वितीय धर्म असत्त्व इन दोनोंको क्रमसे लगानेपर 'स्यादस्तिनास्ति' कथंचित् सत्त्व कथंचित् असत्त्व यह तृतीय धर्म हो जाता है ऐसे ही प्रथम तृतीय आदि धर्मोंको क्रम वा अक्रमसे लगानेसे जैसे 'स्यादस्ति' तथा 'स्यादस्तिनास्ति' इन प्रथम तृतीयको क्रमसे योजन करनेसे 'स्यादस्तिस्यादस्तिनास्ति' कथंचित् सत्त्व कथंचित् सत्त्वासत्त्व यह एक सत्त्वधर्मसे भिन्न अन्य धर्म हो गया. ऐसे ही तृतीय चतुर्थके योजनसे भी अन्य धर्मकी संभावना है तो धर्मोंके सात ही भेद हैं,—यह नियम असङ्गत है । ऐसी शङ्का यदि करो तो उसका उत्तर यह है ।

क्रमाक्रमार्पितयोः प्रथमतृतीयधर्मयोर्धर्मान्तरत्वेनाप्रतीतेः । स्यादस्तिघट इत्यादौ घटत्वावच्छिन्नसत्त्वद्वयस्यासम्भवात्, मृण्मयत्वाद्यवच्छिन्नसत्त्वान्तरस्य सम्भवेऽपि दारुमयत्वाद्यवच्छिन्नस्यापरस्यासत्त्वस्यापि सम्भवेनापरधर्मसप्तकसिद्धेस्सप्तभंग्यन्तरस्यैव सम्भवात् । एतेन—द्वितीय तृतीय धर्मयोः क्रमाक्रमार्पितयोर्धर्मान्तरत्वमिति निरस्तम्;—एकरूपावच्छिन्न नास्तित्वद्वयस्यासम्भवात् ।

क्योंकि,—क्रम वा अक्रमसे अर्पित प्रथम तृतीय धर्मोंकी योजनासे धर्मान्तरकी प्रतीति लोकमें नहीं है। क्योंकि 'स्यादस्ति घटः' इत्यादि वाक्यमें घटत्वावच्छिन्न घटके सत्त्वद्वय असंभव है । मृत्तिकामयत्वादि अवच्छिन्न घटके अन्य सत्ताका संभव होनेपर भी उसी समय दारुमयत्व आदि अन्य घटकी असत्ताका भी संभव होनेसे अन्य उसी प्रकारके सात धर्म सिद्ध हो जायगे. इस हेतुसे अन्य सप्तभङ्गी ही सिद्ध होनेका संभव है न कि सप्त

१ जाननेकी इच्छाओंके. २ सात. ३ भङ्ग आदिका सप्त भेद कथन. ४ धर्मोंके सप्त भेद. ५ कथंचित् घट है. ६ घटको अन्यसे पृथक् करनेवाले घटत्व धर्मसहित ७ एक घट विषयमें दो सत्ताका. ८ मिट्टीके. ९ काष्ठ आदि रचित.

धर्मोंसे पृथक् धर्म ॥ इस प्रकार प्रथम तृतीय धर्मोंकी योजनासे अन्य धर्मकी सिद्धिके स-मर्थनसे प्रथम तथा क्रमसे अर्पित द्वितीय तृतीय धर्मोंकी योजनासे अन्य धर्मसिद्धिका भी खण्डन हो गया । यथा एक पदार्थ विषयक दो सत्त्वके साथ एक रूपावच्छिन्न एक पदार्थ विषयक दो नास्तित्वका असंभव है । जैसे एकधर्मिक कापासमय घटके सत्त्वका अभाव होनेपर उससे भिन्न मृत्तिकादिमय घटकी सत्ताका भी संभव है ॥

ननु च–प्रथमचतुर्थयोर्द्वितीयचतुर्थयोस्तृतीयचतुर्थयोश्च सहितयोः कथं धर्मान्तरत्वम् अवक्तव्यत्वं हि सहार्पितास्तित्वनास्तित्वोभयम्, तथा च यथा क्रमार्पितास्तित्वोभयस्मिन्नस्ति-त्वस्य योजनं न सम्भवति, अस्तित्वद्वयाभावात्, तथा सहार्पितोभयस्मिन्नपीति चेन्न । यतोऽ-वक्तव्यत्वं सहार्पितोभयमेव न किन्तु, सहार्पितयोरस्तित्वनास्तित्वयोः सर्वथा वक्तुमशक्यत्व-रूपं धर्मान्तरमेव; तथा च सत्त्वेनसहितमवक्तव्यत्वादिकं धर्मान्तरं प्रतीतिसिद्धमेव ।

शङ्का,–प्रथम चतुर्थ, द्वितीय चतुर्थ तथा तृतीय चतुर्थ धर्मोंकी साथ योजनासे धर्मा-न्तरकी सिद्धि कैसे होती है? क्योंकि प्रथम धर्मोंकी योजनासे स्यादस्ति अवक्तव्य इस पञ्चमभङ्गकी सिद्धि होती है । यहांपर अवक्तव्य सह अर्पित 'स्यादस्ति' और 'स्या-न्नास्ति' एतत् उभयरूप होगा तो इस प्रकारसे जैसे क्रमसे अर्पित अस्तित्वद्वयमें दूसरे अस्तित्वका कुछ प्रयोजन नहीं है । क्योंकि एक पदार्थ विषयक दो सत्त्वका असंभव है । ऐसे ही साथ अर्पित 'अस्तित्वनास्तित्व' इन उभयरूपमें नास्तित्व भी नहीं रह सकता क्योंकि जहां एक धर्मविषयक नास्तित्व है वहां अन्य अस्तित्वका भी संभव है ऐसी शङ्का नहीं कर सकते हो । क्योंकि अवक्तव्यताके साथ योजित 'अस्ति नास्तित्व' उभय-रूपही नहीं है । किन्तु सह अर्पित अस्तित्व नास्तित्व इन दोनों धर्मोंका सर्वथा कथन कर-नेको अशक्यस्वरूप धर्मान्तर है क्योंकि एक ही पदार्थके विषयमें साथ ही अस्तिता और नास्तिताका कथन नहीं हो सकता । इस प्रकार सत्त्वके साथ अवक्तव्यत्व आदि धर्मान्तर अनुभवसिद्ध ही है ।

प्रथमे भङ्गे सत्त्वस्य प्रधानभावेन प्रतीतिः, द्वितीये पुनरसत्त्वस्य, तृतीये क्रमार्पितयो-स्सत्त्वासत्त्वयोः, चतुर्थेऽवक्तव्यत्वस्य, पञ्चमे सत्त्वविशिष्टावक्तव्यत्वस्य, षष्ठे चासत्त्ववि-शिष्टावक्तव्यत्वस्य, सप्तमे क्रमार्पितसत्त्वासत्त्वविशिष्टावक्तव्यत्वस्येति विवेकः । प्रथमभङ्गादा-वसत्त्वादीनां गुणभावमात्रं, न तु प्रतिषेधः ।

अब प्रथम भङ्गमें अर्थात् 'स्यादस्त्येव घटः' सत्त्वकी प्रधानतासे प्रतीति होती है तथा द्वितीय 'स्यान्नास्त्येव घटः' भङ्गमें असत्त्व अर्थात् असत्ताकी प्रतीति प्रधा-

१ स्यादस्त्येव घटः स्यादस्ति नास्ति च घटः. २ स्यादस्त्येव स्यादवक्तव्य एव. ३ स्यान्नास्त्येव स्यादव-क्तव्य एव. ४ स्यादस्तिनास्ति च स्यादवक्तव्य एव ५ कथंचित् है और अवक्तव्य है. ६ साथ. ७ योजित. ८ दो सत्त्व ९ दूसरी रीतिके अनुसार १० योजित. ११ साथ योजित सत्त्व तथा असत्त्व. १२ सत्ता १३ अवक्तव्यसे भिन्न धर्म १४ कथंचित् घट है. १५ सत्ता १६ अनुभव. १७ कथंचित् घट नहीं है

नतासे है। तृतीय 'स्यादस्ति नास्ति च घटः' भङ्गमें क्रमसे योजित सत्त्व असत्त्वकी प्रधानतासे प्रतीति है। क्योंकि किसी अपेक्षा घटका अस्तित्व और किसी अपेक्षासे नास्तित्वका भी अनुभव होता है। तथा चतुर्थमें अवक्तव्यत्वकी, पञ्चमें सत्तासहित अवक्तव्यत्वकी, षष्ठमें असत्तासहित अवक्तव्यत्वकी, और सप्तमभङ्गमें क्रमसे योजित सत्ता तथा असत्तासहित अवक्तव्यत्वकी प्रधानतासे प्रतीति होती है, इस प्रकार सप्तभङ्गोंका विवेक जानना चाहिये। प्रथम भङ्गसे 'स्यादस्त्येव घटः' आदिसे लेके कहे भङ्गोंमें जो असत्त्व आदिका भान होता है उनकी गौणता है न कि निषेध. क्योंकि जब कथंचित् घटकी सत्ता है ऐसा कहा गया तब कथंचित् असत्ताका भी भान होता है। परन्तु असत्ताकी गौणता और सत्ताकी प्रधानता है ऐसे ही आगेके भङ्गोंमें भी जिस धर्मको कहें, उसकी प्रधानता और उससे विरुद्धकी गौणता समझनी योग्य है॥

ननु–अवक्तव्यत्वं यदि धर्मान्तरं तर्हि वक्तव्यत्वमपि धर्मान्तरं प्राप्नोति, कथं सप्तविध एव धर्मः? तथाचाष्टमस्य वक्तव्यत्वधर्मस्य सद्भावेन तेन सहाष्टभङ्गी स्यात्, न सप्तभङ्गी.–इति चेन्न।

शंकाः–जैसे अवक्तव्यत्वके साथ योजित अस्तित्व नास्तित्व धर्मोंको कथन करनेमें सर्वथा अशक्यत्वरूपता है ऐसेही वक्तव्यत्वभी धर्मांतर हो सकता है तो इस रीतिसे अष्टम वक्तव्यत्वरूप धर्मके होनेसे अष्टभंगी नय कहना उचित है नकि सप्तभंगी? ऐसी शंका नहीं हो सकती॥

सामान्येन वक्तव्यत्वस्यातिरिक्तस्याभावात्। सत्त्वादिरूपेण वक्तव्यत्वं तु प्रथमभङ्गादावेवान्तर्भूतम्। अस्तु वा वक्तव्यत्वं नाम कश्चन धर्मोऽतिरिक्तः, तथापि वक्तव्यत्वावक्तव्यत्वाभ्यां विधिप्रतिषेधकल्पनाविषयाभ्यां सत्त्वासत्त्वाभ्यामिव सप्तभङ्ग्यन्तरमेव प्राप्नोतीति न सत्त्वासत्त्वप्रमुखसप्तविधधर्मव्याघातः। तथा च धर्माणां सप्तविधत्वात्तद्विषयसंशयादीनामपि सप्तविधत्वमिति सप्तभङ्ग्या अधिकसंख्याव्यवच्छेदस्सिद्धः।

क्योंकि सामान्यरूपसे वक्तव्यत्व भिन्न धर्म नहीं है और सत्त्व आदिरूपसे वक्तव्यत्व प्रथम भङ्गादिमें अन्तर्गतही है और वक्तव्यत्वभी कोई पृथक् धर्म मानो तोभी सत्त्वअसत्त्वके समान विधि प्रतिषेध कल्पनाको विषय करनेवाले वक्तव्यत्व तथा अवक्तव्यत्व धर्मोंसे अन्य सप्तभङ्गी ही सिद्ध होगी। इस रीतीसे सत्त्व असत्त्व आदि सप्त प्रकारके धर्मका व्याघात नहीं हुआ। इससे यह सिद्धान्त हुआ की धर्मोंके सात भेद होनेसे उनके विषयभूत संशय जिज्ञासा तथा प्रश्नादिकभी सप्तभेदसहित हैं इस कारणसे सप्तभङ्गीकी अधिक संख्याका निराकरण हुआ॥

नन्वेवं रीत्याऽधिकसंख्याव्यवच्छेदेऽपि न्यूनसंख्याव्यवच्छेदः कथं सिद्ध्यति? तथाहि–

१ कथंचित् नहीं है. २ सत्ता. ३ असत्ता. ४ अनुभव. ५ कथंचित् घट है. ६ असत्ता. ७ अप्रधानता नकि निषेध. ८ स्यादस्त्येव ९ सात प्रकारके.

यदि घटादावस्तित्वप्रमुखाशेषधर्मा प्रामाणिकाःस्युः, तदा तद्विषयसंशयादिक्रमेण सप्तभङ्गी सिद्ध्येत्। तदेव न, सत्त्वासत्त्वयोर्भेदाभावात्। यत्स्वरूपेण सत्त्वं तदेव पररूपेणासत्त्वं। तथा च न प्रथमद्वितीयभङ्गौ घटेते। तयोरन्यतरेणैव गतार्थत्वात्। एवं च तृतीयादिभङ्गाभावात्कुतस्सप्तभङ्गी ?–इति चेत्।

कदाचित् यह शङ्का करोकि–इस रीतिसे सात संख्यासे अधिक संख्याका व्यवच्छेद सिद्ध होनेपरभी न्यून संख्याका निराकरण कैसे हो सकता है? इस शङ्काका निरूपण ऐसे है कि यदि घट आदि पदार्थोंमें सात धर्म प्रामाणिक हों तो उनके विषयभूत संशय आदिके अति क्रमसे सप्तभङ्गी सिद्ध हो। परन्तु यही नहीं सिद्ध होता अर्थात् सप्तधर्म प्रमाणिक नहीं होते। क्योंकि सत्त्व तथा असत्त्वका भेद नहीं है। इसका कारण यह है कि जो पदार्थ जैसे घट, अपने रूपसे सत्त्वरूप है वही पैर पट आदि रूपसे असत्त्वभी है। इस प्रकार प्रथम 'स्यादस्त्येव' तथा द्वितीय 'स्यान्नास्त्येव' दो धर्म नहीं घटित हो सकते। इन दोनोंमेंसे अर्थात् सत्त्व अथवा असत्त्व एकमें दूसरा गतार्थ है। सत्त्व मानो तो असत्त्वकी आवश्यकता नहीं है और असत्त्व मानो तो सत्त्वकी आवश्यकता नहीं है इस प्रकारसे तृतीय आदि भङ्गोंके अभावसे सप्तभङ्गी कैसे और कहांसे सिद्ध हो सकती है? क्योंकि जब स्वरूपसे जो सत्ता है वही अन्यरूपसे असत्ता है तब 'स्यादस्ति नास्ति च' कथंचित् सत्त्व कथंचित् असत्त्व कहनेकी क्या आवश्यकता है? यदि ऐसी शङ्का करो तो—

अत्रोच्यते। स्वरूपाद्यवच्छिन्नमसत्त्वमित्यवच्छेदकभेदात्तयोर्भेदसिद्धेः। अन्यथा स्वरूपेणेव पररूपेणापि सत्त्वप्रसङ्गात्। पररूपेणेव स्वरूपेणाप्यसत्त्वप्रसङ्गाच्च।

इसका उत्तर यह है—क्योंकि स्वरूप आदि अवच्छिन्न सत्त्व है और पररूप आदि अवच्छिन्न असत्त्व पदार्थ यहां सत्त्व असत्त्वसे विवक्षित हैं। इस प्रकार स्वरूपादित्व और पररूपादित्व इन दोनों अवच्छेदक धर्मोंके भेदसे सत्त्व तथा असत्त्व इनका भेद सिद्ध है। यदि ऐसा न हो तो स्वरूपसे सदृश पररूपसे सत्त्वका प्रसङ्ग हो जायगा। और इसी रीतिसे पर रूपके असत्त्वके तुल्य स्वरूपसेभी असत्त्वका प्रसङ्ग हो जायगा और अवच्छेदक भेद माननेसे दोनोंका भेद स्पष्ट ही है।

किं च सत्त्वं हि वृत्तिमत्त्वं, भूतले घटोऽस्तीत्यादौ भूतलनिरूपितवृत्तित्ववान्घट इति बोधात्। असत्त्वं चाभावप्रतियोगित्वम्, भूतले घटो नास्तीत्यादौ भूतलनिष्ठाभावप्रतियोगी घट इति बोधात्। तथा च सत्त्वासत्त्वयोस्स्वरूपभेदोऽप्यस्त्येव।

और यह भी है कि सत्त्व वृत्तिमत्त्वरूप होता है। जैसे 'भूतले घटोऽस्ति' यहां पर भूतल निरूपित जो वृत्तिता तादृश वृत्तितावान् घट' ऐसा शाब्दबोध होता है। और असत्त्वके अभावका प्रतियोगित्वरूप होता है जैसे 'भूतले घटो नास्ति' पृथ्वीपर घट नहीं

१ निराकरण या दूरीकरण. २ ध्यान ३ प्रमाणसिद्ध ४ अन्य. ५ घटादिनिष्ठानि. ६ पृथक् करनेवाले ७ अपने रूप. ८ वृत्तिमानस्वरूपको पदार्थमें व्यवस्थापन ९ पृथ्वीतल पर दि. १० प्रतिरूपतर्कन. ११ व्याप्यमानकी ऐसी जिस पदार्थका अभाव वा असत्त्व कहते हैं वह पदार्थ उस अभावका प्रतियोगी होता है.

है इत्यादि प्रयोगोंमें भूतलनिष्ठ जो अभाव उसका प्रतियोगी घट ऐसा शाब्दबोध होता है। तात्पर्य यह है कि 'भूतले घटोऽस्ति' इत्यादिमें सत्त्व वृत्तिता सम्बन्धसे घटमें अन्वित है। और 'भूतले घटो नास्ति' यहां अभावका प्रतियोगिता सम्बन्धसे घटमें अन्वय है। इस प्रकार सत्त्व तथा असत्त्वका स्वरूपभेद पूर्ण रूपसे है।

अपि च–ये त्रिरूपं हेतुमिच्छन्ति सौगतादयः। ये वा पञ्चरूपमिच्छन्ति नैयायिकादयः, तेषामुभयेषामपि हेतोस्सपक्षसत्त्वापेक्षया विपक्षासत्त्वं भिन्नमेवाभिमतं; अन्यथा स्वाभिमतस्य त्रिरूपत्वस्य पञ्चरूपत्वस्य वा व्याघातात् इति।

और भी जो हेतुकी त्रिरूपता बौद्धमतावलम्बी मानते है–और जो नैयायिक पञ्चरूपता मानते है उन दोनोंकोभी हेतुकी सपक्षमें सत्त्वकी अपेक्षासे विपक्षमें असत्त्व भिन्नही अभीष्ट है। यदि ऐसा न माने तो अपने २ मतमें स्वीकृत त्रिरूपता तथा पंचरूपताकी हानि होगी। पक्षधर्मता, सपक्षे सत्त्व, विपक्षे असत्त्व, ये तीन हेतुरूप बौद्धमतानुयायी मानते हैं। जैसे 'पर्वतो वह्निमान् धूमात्' धूमदर्शनसे ज्ञात होता है कि पर्वतमें अग्नि है। 'धूमात्' यह पञ्चम्यन्त पद हेतु है उसकी पक्षधर्मता है. सपक्ष महानसमेंभी धूमका सत्त्व है। और विपक्ष जलहृद आदिमें धूमका असत्त्वभी है। और नैयायिक तीन ऊपर कहेहुयेसे अधिक अबाधित विषयता तथा असत् प्रतिपक्षता ये दो रूप हेतुके और मानते हैं। इनमेंसे साध्यसे विपरीत निश्चय करानेवाले प्रबल प्रमाणका अभाव जो है उसको अबाधित विषय कहते हैं। जैसे पर्वतमें साध्यभूत अग्निके विपरीत निश्चय करानेवाला प्रबल प्रमाण प्रत्यक्ष नहीं है. क्योंकि धूम देखनेके पश्चात् यदि पर्वतमें जाओ तो अग्नि अवश्य मिलेगी। इससे धूमरूप हेतुका विषय प्रबल प्रमाणसे बाधित नहीं है। इस लिये यह हेतु अबाधित विषय है। और उसी प्रकार साध्यसे विपरीत निश्चय करानेवाले समबल प्रमाणकी शून्यता जिस हेतुको हो उसको असत्प्रतिपक्ष हेतु कहते हैं। अर्थात् जिसके साध्यसे विरुद्ध साध्य सिद्ध करनेवाला प्रतिद्वन्द्वी हेतु न हो सो यहां पर्वतमें अग्निसे विरुद्ध अग्निके अभावका साधक कोई अनुमानादि प्रमाण नहीं है इस कारण धूमरूप हेतु असत्प्रतिपक्षी है। इन दोनो अर्थात् बौद्ध और नैयायिकको अभीष्ट सपक्ष सत्त्व तथा विपक्षासत्त्वरूप हेतुके दूसरे तथा तीसरे अङ्गमें यदि सपक्षसत्त्वकी अपेक्षा विपक्षमें असत्त्वको भिन्न न मानेंगे अर्थात् सत्त्वअसत्त्वको एकरूपही मानेंगे तो बौद्धका अभीष्ट हेतुकी त्रिरूपता और नैयायिकको अभीष्ट पञ्चरूपता सिद्ध नहीं होगी क्योंकि सत्त्व असत्त्व एक मानेसे एकमें दूसरा गतार्थ होनेसे एक अङ्ग जाता रहैगा. इस लिये उनके सिद्धान्तसेभी सत्त्व और असत्त्वका भेद सिद्ध हो गया॥

---

१ भूतलपर रहनेवाला. २ पक्षरूप पर्वतमें वृत्तिरहना ३ रसोईके घर. ४ तडाग आदि ५ अग्निआदि. ६ अनुमानसे प्रबल ७ प्रत्यक्ष ८ धूम. ९ अनुमान वा आगम १० समान पक्ष महानसआदिमें हेतुकी सत्ता ११ विपक्ष महा हृदादिमें हेतुकी असत्ता ११ तीन रूपता.

अथैवमपि कथंचित्सत्त्वापेक्षया क्रमार्पितोभयस्य को भेद ? न हि प्रत्येकघटपटापेक्षया घटपटोभयं भिन्नम्–इति चेत्;

शंका–अब कदाचित् यह कहो कि कथंचित् सत्त्वकी अपेक्षा क्रमसे योजित सत्त्व असत्त्व कैसे भिन्न हो सकते हैं ? अर्थात् जैसा कथंचित् सत्त्वका रूप है वैसाही क्रमसे योजित सत्त्वासत्त्वमेंभी सत्त्वका रूप है सो क्रमयोजित उभयके सत्त्वका कथंचित् सत्त्वकी अपेक्षासे क्या भेद है ? क्योंकि प्रत्येक घटपटकी अपेक्षासे क्रमयोजित घट पट उभयमें घट पट भिन्न नहीं हैं । ऐसी शंकाभी युक्त नहीं है ॥

प्रत्येकापेक्षयोभयस्य भिन्नत्वेन प्रतीतिसिद्धत्वात् । अतएव–प्रत्येकघकारटकाराद्यपेक्षया क्रमार्पितोभयरूपं घटपदमतिरिक्तमभ्युपगम्यते सर्वैः प्रवादिभिः । अन्यथा प्रत्येकघकाराद्यपेक्षया घटपदस्याभिन्नत्वे घकाराद्युच्चारणेनैव घटपदज्ञानसम्भवेन घटत्वावच्छिन्नोपस्थिति-सम्भवाच्छेषोच्चारणवैयर्थ्यमापद्येत । अतएव प्रत्येकपुष्पापेक्षया मालाया कथंचिद्भेदस्सकलानुभवसिद्धः । इत्थं च कथंचित्सत्त्वासत्त्वापेक्षया क्रमार्पितोभयमतिरिक्तमेव ।

क्योंकि प्रत्येककी अपेक्षासे उभयरूप समुदायका भेद अनुभवसिद्ध है । इस हेतुसे प्रत्येक घकार तथा टकारकी अपेक्षासे क्रमसे योजित घकार टकार एतत् उभय समुदायरूप घट इस पदको सब वादियोंने भिन्न माना है । और यदि प्रत्येक घकार तथा टकार आदिकी अपेक्षासे घट पदको अभिन्न मानो तो केवल घकारादिके ही उच्चारणसे घटपदके ज्ञानके सम्भव होनेसे घटत्व अवच्छिन्न उपस्थितिका संभव है तो शेषका उच्चारण व्यर्थ होगा । इसी हेतुसे प्रत्येक पुष्पकी अपेक्षासे मालाका कथंचित् भिन्नरूपसे अनुभव सबजन प्रसिद्ध है इस प्रकार माननेसे कथंचित् सत्त्वकी अपेक्षा क्रमार्पित उभयरूप भिन्नही है ॥

स्यादेतत्, क्रमार्पितोभयापेक्षया सहार्पितोभयस्य कथं भेद ? क्रमाक्रमयोःशब्दनिष्ठत्वे नार्थनिष्ठत्वाभावात् । न हि घटादौ क्रमार्पितसत्त्वासत्त्वोभयापेक्षयाऽक्रमार्पितसत्त्वासत्त्वोभयमतिरिक्तमस्ति । घटपटोभयाधिकरणे भूतले क्रमार्पितघटपटोभयभेदे सहार्पितघटपटोभयं चापरमिति न केनाप्यनुभूयते ।

अस्तु कथंचित् सत्त्वका क्रमसे योजित उभयरूपका भेद सिद्धभी हो परन्तु क्रमसे योजित सत्त्व असत्त्व उभयरूपकी अपेक्षासे सह योजित सत्त्व असत्त्व इस उभयरूपका भेद कैसे सिद्ध हो सकता है ? क्योंकि सत्त्व असत्त्वके क्रम वा अक्रम शब्दनिष्ठ हैं अर्थनिष्ठ नहीं हैं । सत्त्व असत्त्व इनकी साथ योजना करो वा क्रमसे, रहेंगे तो सत्त्व असत्त्व येही । इस हेतुसे क्रमसे अर्पित सत्त्व असत्त्व इस उभयरूपकी अपेक्षासे साथ अर्पित इस उभय रूपका भेद नहीं सिद्ध हो सकता । क्योंकि घट आदि पदार्थमें क्रमसे अर्पित सत्त्व असत्त्व उभयरूपकी अपेक्षासे अक्रमसे अर्पित सत्त्व असत्त्व यह उभयरूप भिन्न नहीं है । घट और पट इन दोनोंके आधारभूत भूतलमें क्रमसे योजित घट पट यह उभयरूप और साथ

१ अन्य अक्रम. २ पृथक् रूप भेद ३ घकारादिमें भिन्नभूत टकारादिका उच्चारण. ४ वाद ५ शब्दमें पदार्थमें ६ अर्थमें रहनेवाले ७ साथ.

अर्पित घट पट यह उभयरूप अन्य २ है, यह अनुभव किसीकोभी नहीं होता । क्योंकि क्रमसे योजना करो वा साथ, पदार्थ वही घट पट उभयरूप दोनों दशामें है ।

अथ क्रमार्पितसत्त्वासत्त्वोभयापेक्षयाऽक्रमार्पितसत्त्वासत्त्वोभयस्य भेदाभावेऽपि न क्षतिः । अपुनरुक्तवाक्यसप्तकस्यैव सप्तभङ्गीपदार्थत्वेन सप्तधा वचनमार्गप्रवृत्तेर्निराबाधत्वात् । सत्त्वासत्त्वधर्मविषयतया सप्तधैव वचनमार्गाः प्रवर्तन्ते नातिरिक्ताः, पुनरुक्तत्वादित्यत्र सप्तभङ्गीतात्पर्यात् । स्वजन्यबोधसमानाकारबोधजनकवाक्योत्तरकालीनवाक्यत्वमेव हि पुनरुक्तत्वम् । प्रकृते च तृतीयचतुर्थयोर्नेदृशं पौनरुक्त्यं सम्भवति, तृतीयभङ्गजन्यबोधे अस्तित्वविशिष्टनास्तित्वस्य प्रकारतया चतुर्थभङ्गजन्यबोधे चास्तित्वनास्तित्वोभयस्य प्रकारतया तृतीयचतुर्थजन्यबोधयोस्समानाकारत्वविरहात्–इति चेन्न । तथा सत्यधिकभङ्गस्य दुर्निवारत्वात् । तथाहि–यथा तृतीयचतुर्थयोरपौनरुक्त्यं विलक्षणबोधजनकत्वात् । तथा व्युत्क्रमार्पितस्य स्यान्नास्ति चास्ति चेति भङ्गस्य नास्त्यस्तित्वसहितावक्तव्यत्वप्रतिपादकभङ्गान्तरस्य च न तृतीयसप्तमाभ्यां पौनरुक्त्यम् । अस्तित्वविशिष्टे नास्तित्वप्रकारकबोधस्य तृतीयेन जननात्, व्युत्क्रमप्रयुक्तेन नास्तित्वसहितास्तित्वप्रकारकबोधस्य जननाच्च विशेषणविशेष्यभावे वैपरीत्येन तादृशबोधयोस्समानाकारत्वाभावात् । एवं सप्तमेनापि व्युत्क्रमार्पितोभयसहितावक्तव्यत्वप्रतिपादकभङ्गस्येति नवभङ्गी प्राप्नोति । इति चेत् ।

कदाचित् यह कहो कि क्रमसे योजित सत्त्व असत्त्व इस उभयरूपकी अपेक्षासे अक्रम योजित सत्त्व असत्त्व इस उभयरूपका भेद न होनेपरभी कोइ हानि नहीं है । क्योंकि पुनरुक्तिदोषरहित वाक्यसप्तक समुदायरूप ही सप्तभङ्गी पदार्थ है । उसके द्वारा सैप्त प्रकारसे वचनमार्गकी प्रवृत्तिमें कोई बाधा नहीं है । सत्त्व असत्त्व धर्मके विषयतारूपसे सप्तभेदसे वचनके मार्ग प्रवृत्त हो सकते हैं न कि अधिक । क्योंकि अधिक होनेसे पुनरुक्तिदोष आता है । इसी अर्थके बोधनमें सप्तभङ्गीन्यायका तात्पर्य है । क्योंकि एक वाक्यजन्य जो बोध है उसी बोधके समान बोधजनक यदि उत्तर कालका वाक्य हो तो यही पुनरुक्तदोष है । और प्रचलित प्रकरणमें तृतीय **'स्यादस्ति नास्ति च घटः'** तथा चतुर्थ **'स्यादवक्तव्य एव घटः'** भङ्गोंमें ऐसा पुनरुक्तदोषसंभव नहीं है. क्योंकि तृतीयभङ्गजन्य ज्ञानमें अस्तित्वविशिष्ट नास्तित्व प्रकारतासे भासता है और चतुर्थ **'स्यादवक्तव्य एव'** भङ्गजन्य ज्ञानमें अस्तिनास्तित्व उभयत्वरूप अवक्तव्यत्वके साथ अन्वित होकर प्रकारतासे भासता है. इस कारण तृतीय तथा चतुर्थ भङ्गसे उत्पन्न ज्ञानोंमें समानाकारता नहीं है क्योंकि तृतीय भङ्गजन्यबोधमें अस्तित्वनास्तित्वप्रकारता अवच्छेदक धर्म है । और चतुर्थभङ्गजन्यबोधमें उभयत्वप्रकारता अवच्छेदक धर्म है इस हेतुसे अवच्छेदक धर्म भिन्न होनेसे समान आकारवाले बोधोंका अभाव है । सो यह कथनभी युक्त नहीं है । क्योंकि ऐसा भेद माननेसे सप्तभङ्गसे अधिक भङ्गकी संख्या दुर्निवारणीय है । इसका निरूपण

१ दो वा दोका समुदाय २ विनाक्रम ३ सात ४ एक वाक्यसे उत्पन्न ५ ज्ञान ६ सप्तभङ्गी नय ७ उत्पन्न ८ सहित विशेषणता १० उत्पन्न ११ सादृश्य १२ ज्ञान १३ कठिनतासे दूर करनेयोग्य

